यद्वाचमाकर्ण्य[1] सुधावधीरणीं नैवाद्रणन्तीह बुधाः सुधामपि ।
तं दैशिकेन्द्रं प्रणमामि योगिनं ज्ञानावतारं खलु ब्रह्मणोऽपिहि ॥४॥
मायाकृतं द्वन्द्वमनन्तपारं भयावहं तर्तुमपारयन्तम्[2] ।
विलोक्य योऽद्वन्द्वपदं प्रदर्श्य भयापहस्तं गुरुमाश्रयेऽहम् ॥५॥
वाणीं यस्य बुधा निपीय विमलां गायन्ति सर्वोज्वलम्,
सर्वानन्दकरं ह्यलौकिययशः स्वानन्दमग्ना मुहुः ।
ध्यायन् यस्य पदारविन्दमनघं भक्तश्च भोमुच्यते,
ग्राहाज्जन्मजरादितो द्रुततरं वन्दे कबीरं हि तम् ॥६॥
मूर्तिर्यस्य मनीषया हृदि धृता धैर्यं च धर्मं क्षणाद्,
दत्ते शान्तिमनुत्तमां च विततां विस्तारयन्ती यशः ।
स्वर्गं मोक्षसुखं[3] च मोक्षमतुलं तद्धेतुविद्याधनम्,
अन्यद्यच्च सुवांछितं तमनघं वन्दे कबीरं गुरुम् ॥७॥
पेयं सुधासमरसं वचनं यदीयं गेया गुणाश्च सततं भवबन्धमुक्त्यै ।
ध्येया सदैव विमला सुजनैर्यदीया मूर्तिर्वरा तमहमाप्तवरं प्रपद्ये ॥८॥
समरसं विरसं [4]भववारिधौ सुशरणं [5]रसशालिनमव्ययम् ।
श्रुतिविदा विदितं विदुषां वरं कविवरं हि कबीरमहं श्रये ॥९॥
कलुषहं करुणाकरसत्कथं त्वकथकायविराजितमोक्षदम्[6] ।
करुणया धृतकायमकायकं कविवरं हि कबीरमहं श्रये ॥१०॥
कुसरणौ प्रतिपद्य विमोहतः कुरमणे रमणाय कृतेहितम् ।
निजदृशि[7] प्रतिपाद्य प्रबोधकं कविवरं हि कबीरमहं श्रये ॥११॥
समुदायास्तविहीनमनीहं विमलबोधमयं गततापम् ।
गतमलं क्षयवृद्धिविहीनं विधुवरं हि भजे बुधबीरम् ॥१२॥
न वज्रधारी न च योऽसुरारिर्गतिर्न यस्याभ्रमुवल्लभेन ।
तथापि धीरं परमं कबीरं भजेऽहमिन्द्रं खलु देवदेवम् ॥१३॥

---

१ सुधाया अवधीरणं च स्वर्गतत्रत्यविषयसुखादीनां तुच्छत्वबोधनेन प्रियतमात्मबोधकत्वेन च । २ पर्याप्तिवचनेष्विति तुमुन् । ३ जीवन्मुक्तिसमाधिजं सुखम् । विदेहनिर्विशेषमोक्षम् ।

४ रागाश्रयविषयादियुक्तेऽपि संसारे सर्वथारागादिभिरसम्बद्धम् ।

५ आत्मानन्दस्वरूपब्रह्मानन्देन सदैव दीप्यमानम् ।

६ यस्य शरीरविषये हीदमित्थतया किञ्चिद्वक्तुम् कैरपि न शक्यते, सर्वथाऽलौकिकविग्रहत्वाच्चिद्विग्रहत्वाच्च । ७ निज़दृक् स्वरूपे स्वकीयज्ञानमार्गे वा ।

विरक्तं सुशीलं गतग्रन्थिवर्गं गतस्नेहसन्देहलेशं परेशम् ।
पवित्रं परं पावनं पापदूरं नमस्यामि तं शाश्वतं श्रीकबीरम् ॥१४॥
उदारं गुणागारसंतोषयुक्तं दयागारदैन्यादिहीनं सुशान्तम् ।
गरिष्ठं[1] वरिष्ठं सदा ब्रह्मनिष्ठं हितं भाषमाणं भजेऽहं कबीरम् ॥१५॥
असक्तं जितद्वन्द्वदोषं सुयुक्तमहिंसादयासत्यसौम्यैकमूर्तिम् ।
शमाद्यैः सुयुक्तं मदाद्यैर्वियुक्तं गतद्रोहलेशं भजेऽहं कबीरम् ॥१६॥
गुरुं ब्रह्मभावेन वै मन्यमानं वदन्तं तथा शिष्यवर्गेषु शश्वत् ।
मुनिं ज्ञानविज्ञाननिष्ठं स्थविष्ठं[2] समं निस्पृहं संश्रयेऽहं सुधीरम् ॥१७॥
यद्दर्शनं[3] दोषगणान्निहन्ति साप्नोति सर्वं खलु मङ्गलं च ।
तं निर्मलं शुद्धतमं सुवृत्तं वन्दे सदाऽहं सुगुरुं सुधीरम् ॥१८॥
शमो दमस्तोषविशुद्धसत्त्वाऽहिंसादयामैत्रिमनीषितादि ।
तपःक्षमासत्यविवेकितादिसद्रत्नपूगोऽस्ति भजे हि यस्य ॥१९॥
स्पर्द्धादिहीनं[4] गतगर्वखर्वं सदैव मान्यं बुधसज्जनानाम् ।
दीने दयादानयुतं शरण्यं भजे सदाऽहं सुगुरुं कबीरम् ॥२०॥

संसाराब्धौ प्रचलितमहाकामकोपादिभङ्गात् ,
भ्रान्तान् [5]स्रस्तान् स्वपरसगुरो ! पाहि लालप्यमानान् ।
जीवान् दृष्ट्वा [6]सपदि करुणाव्याप्तचित्तोऽभवद्यो,
मोहध्वान्तावरणहरणे सम्प्रवृत्तो नुमस्तम् ॥२१॥
अहिंसाशौचाद्यैः शमदमदयादाननिवहै–
र्विमृष्टस्वान्ता ये विगतमदमोहाः सुमनसः ।
असारं पश्यन्तो जगदिदमपारं त्वनुपलं,
हितं तेषामुक्तं गुरुवरकवीरैश्च जगतः ॥२२॥
ब्रह्मा चतुर्मुखो[7] यो नो विष्णुर्यो न चतुर्भुजः ।
शिवस्त्रिनयनो यो नो तं धीरं मिहिरं भजे ॥२३॥

---

१ अतिशयेन गुरुन् = गाम्भीर्यसात्त्विकधैर्ययुक्तमतिमहान्तम् । २ विभु-स्वरूपम् , प्रवृद्धम् । ३ यदीयस्वरूपस्य प्रत्यक्षं ज्ञानम् , यदीयविचारात्मकोग्रन्थश्च । ४ गतो गर्वात्मकः खर्वोह्रस्वता यस्मादिति भावप्रधानो निर्देशः । ५ स्वलद्यात् च्युतान् । ६ शीघ्रम् । ७ यश्चतुर्मुखो नास्ति तथापि ज्ञानवान् सन्, ज्ञानवन्तं पुरुषं रचयति । तं रक्षयति अविद्यादिकं संहरतीति भावः । अतएव विधाताविष्णुः शिवश्चयस्तं धीरं मिहिरं ( सूर्यं ) सर्वप्रकाशकं गुरुम् भजे ।

स्वाम्नायशिखरैस्तुल्या वाणी यस्य विराजते।
तं सर्वसुहृदं हृद्यं कवीरं मिहिरं भजे ॥२४॥
यत्पादकमलं पोतं विधायैवात्र सज्जनाः।
भवन्ति भवपारं तं सत्यं सद्गुरुमाश्रये ॥२५॥
यच्छरणं हरते भवतापं यच्चरणं तरणं भवसिन्धोः।
यद्वरणं[1] वरमानसतोषं तं हि भजे करुणाभकवीरम् ॥२६॥
पूर्वेषां स[2] गुरुरिति वचनाद्यः परः शास्ति सत्यम्,
आचार्यस्य वपुषि स विलसत्यागमोऽप्याह तथ्यम्।
देवानां च परतमरमणः सत्तमोऽद्वैतपथ्यो[3],
वन्दे तं त्विह निखिलनिगमैर्ज्ञेयमेकं कवीरम् ॥२७॥
पठित्वा सकृदेवाहं यद्वाक्यं श्रद्धयाऽभवम्।
महाग्राहाद् भ्रमान्मुक्तस्तस्मै किन्नु ददाम्यहम् ॥२८॥
मनो नास्ति वशेऽस्माकं कायश्च क्षणभङ्गुरः।
किञ्चिद् धनादिकं नास्ति यदस्ति तत्कृतं तव ॥२९॥
अतो मे प्रणतिः शश्वत्पादयोस्ते दयानिधे !।
विधेयं मे मनस्तादृक् त्वत्स्वरूपे हि यद्वसेत् ॥३०॥
मन्त्रं यदीयमलभ्य भवाब्धिमध्ये,
शिक्षातरिं च सुतरां गुरुकर्णधाराम्।
लब्धुं सदाऽस्मि सबलो भवभीतिमुक्त-
स्तं[4] नौमि तं च गुरुमद्वयमात्मरूपम् ॥३१॥
दीक्षाप्रदं[5] गुरुवरं खलु मोहनाख्यं, शिक्षाप्रदं च रमितागुरुमाशुतोषम्।
विद्याप्रदं हरिहरं बुधबोधनालं, वन्दे च यैर्गुरुवरैः प्रतिबोधितोऽहम् ॥३२॥

---

१ जिनका वरण ( स्तुति = प्रार्थना ) श्रेष्ठ मन की तुष्टि का जनक होता है। करुणया भातीति करुणाभः, तं हि भजे।

२ स पूर्वेषामपि गुरुः कालेनानवच्छेदात्-इति योगसूत्रम्। परिपक्वमला ये तानुत्सादनहेतुशक्तिपातेन योजयति परे तत्त्वे स दीक्षयाआचार्यमूर्तिस्थः। स ईश्वरः। ३ पथोऽनपेतः पथ्योऽद्वैतश्चासौपथ्य इति विग्रहः।

४ मन्त्रप्रदं शिक्षाप्रदं चाद्वयं परमात्मस्वरूपं गुरुम् नमस्करोमि।

५ दीयते विमलं ज्ञानं क्षीयते कर्मवासना। व्याख्याता तेन दीक्षेति विद्वद्भिस्तत्त्वदर्शिभिः॥ १ ॥ इति क्वचित् "शाम्बुपुराणे अ० ३५ चोक्तम्" स्नानाद्दानाज्जपाद्धोमात्संयोगाद्देवकर्मणः। शिरसो वपनाच्चैवदीक्षितः पुरुषो

गुरुरात्मवतामात्मा शास्ता धाता पितामहः ।
वन्द्यश्च पूजनीयश्च तस्मा अस्तु नमो नमः ॥३३॥
ईशो मेशः सुरेशश्च गणेशः सर्वदेवताः ।
विधिः सरस्वती सूर्यस्तस्मिन्नेव समाहिताः ॥३४॥

---

भवेत् ॥२॥ इत्यादि वचनों के अनुसार दीक्षाप्रद और शिक्षाप्रद दोनों गुरु ज्ञानप्रद होते हैं । अतः कहीं एक की वन्दना से भी दोनों की वन्दना समझी जाती है । और वस्तुतः "सो गुरु निशिदिन बन्दिये, शब्द लखावै दाव" इत्यादि भेद को मूर्ख नहीं समझते हैं । अतः संशयग्रस्त होते हैं ।

इस प्रकरण के प्रथम और तृतीय श्लोक के "मन्दाक्रान्ता" नामक छन्द है । लक्षण है कि "मन्दाक्रान्ता" ऽम्बुधिरसनगैर्मो भनौ गौ य युग्मम्" जिसके पाद में मगन, भगन, नगन दो गुरु, दो यगन होते हैं और चार, छौ, सात पर विश्राम होता है ॥१॥

दूसरा के "सुवंशा" नामक छन्द है "ख्याता पूर्वैः "सुवंशा" यदि मरभना स द्वयं गौ गुरुश्च" यदि मगन, रगन, भगन, नगन, दो सगन, दो गुरु क्रम से हों तो वह पूर्व के आचार्यों से "सुवंशा" नामक छन्द कहा गया है ॥२॥

चतुर्थ के "इन्द्रवंशा" नामक छन्द है । "वदन्ति "वंशस्थविलं" जतौ जरौ । "तच्चेन्द्रवंशा" प्रथमाक्षरे गुरौ" जगन, तगन, जगन, रगन के क्रम से रहने पर "वंशस्थविलं" या "वंशस्तनित" नामक छन्द होता है और उसीमें प्रथमाक्षर के गुरु रहने पर "इन्द्रवंशा" वृत्त छन्द कहा जाता है ॥३॥

पञ्चम के "उपजाति" वृत्त कहते हैं क्योंकि "स्याद् इन्द्रवज्रा यदि तौ जगौ गः । "उपेन्द्रवज्रा" प्रथमे लघौ सा" दो तगन एक जगन, दो गुरु के रहने से इन्द्रवज्रा होता है । उसी में प्रथमाक्षर के लघु होने पर "उपेन्द्रवज्रा" वृत्त होता है और प्रथमाक्षर किसी पाद में लघु हो किसी में गुरु हो तो "उपजाति" नामक वृत्त होता है, सो अन्यत्र भी ज्ञातव्य है ॥४॥

छव, सात के "शार्दूलविक्रीडित" वृत्त है । "सूर्याश्वैर्मसजस्तताः स गुरवः "शार्दूलविक्रीडितम्" मगण, सगन, जगन, सगन, दो तगन, गुरु से शार्दूलविक्रीडित" होता है । उसमें सूर्य १२ और अश्व ७ पर विश्राम होता है ॥५॥

अष्टम का "वसन्ततिलक" वृत्त है । "ज्ञेयं "वसन्ततिलकं" तभजा जगौ गः" तगन, भगन, दो जगन, दो गुरु से "वसन्ततिलक" होता है ॥६॥

## अथ सम्बन्धः

इयं प्रवृत्तिर्मननात्मिका मम श्रुतस्य वाक्यस्य गुरोर्गरीयसः[1]।
उपासनैव क्रियते मया त्वियं स्मृतिर्यथा स्यात्सततं गुरोर्गुरोः ॥१॥
लब्ध्वाऽत्र मानुष्यमतीव[2] दुर्लभं योषिद्धिरण्यादिपरैः[3] कुबुद्धिभिः।
मूर्ध्वस्थितो मृत्युरतीव दुर्धरो नो दृश्यते नैव च सोऽत्र वार्यते ॥२॥

---

नवम से एकादश पर्यन्त का "द्रुतविलम्बित" वृत्त है। "द्रुतविलम्बित-माह नभौ भरौ" नगन, दो भगन, रगन से द्रुतविलम्बित" वृत्त होता है।

द्वादश श्लोक में पन्द्रह मात्रा के पाद हैं, एकादशाक्षर हैं। नगन, दो भगन, दो गुरु के प्रत्येक पाद में है, नाम अनिर्दिष्ट है ॥१२॥

तेरहवाँ श्लोक का "उपेन्द्रवज्रा" वृत्त है ॥१३॥ आगे १४ से १७ चौदह से सतरह तक द्वादशाक्षर पाद वाले श्लोक हैं, नाम अनिर्दिष्ट हैं। फिर १८ से २० तक "इन्द्रवज्रा" तुल्य है। इक्कोशवाँ का "मन्दाक्रान्ता" नामक वृत्त है। बाइसवाँ का "शिखरिणी" वृत्त है। २३ से २५ तक अनुष्टुप् है। छब्बिशवाँ का "दोधक" नामक वृत्त है। सताइसवाँ "चित्रलेखा" से मिलित सा है। ३१ और ३२ श्लोकों का "वसन्ततिलक" नामक वृत्त छन्द है।

सम्बन्ध प्रकरण के प्रथम श्लोक "वंशस्थविल" नामक छन्द रूप है "वदन्ति "वशस्थविलं" जतौ जरौ" यह उसका लक्षण है।

दूसरा श्लोक 'इन्द्रवंशा' नामक है, "तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ" यह लक्षण है। ग्यारह श्लोक तक इन दोनों का मिश्रित स्वरूप है (उपजाति है)। द्वादश श्लोक का 'इन्द्रवज्रा' नामक छन्द है। "स्याद् = इन्द्रवज्रा = यदि तौ जगौ गः" यह लक्षण है। फिर १३, १४, १५ श्लोक "वंशस्थविल" और "इन्द्रवंशा" के मिश्रण हैं। सोलहवाँ "इन्द्रवज्रा" है। १७, १८, १९ इनके उक्त ही छन्द हैं। २०,२१ के "वसन्ततिलक" नामक छन्द हैं। ज्ञेयो "वसन्त-तिलकं" तभजा जगौ गः" यह लक्षण है। एकतिसवाँ का कोई लक्षण नहीं मिलता है, कुछ अनुष्टप् हैं। ३५ आदि के उक्त ही छन्द हैं। ५७, ५८ के "भुजङ्ग प्रयात" नामक छन्द है। "भुजङ्गप्रयातं, चतुर्भिर्यकारैः" यह लक्षण है। उनसठ का "सुवंशा" नामक छन्द है, "ख्याता पूर्वैः "सुवंशा" यदि मरभनाः स द्वयं गो गुरुश्च" यह लक्षण है।

१ अतिशयेन गुरुर्गरीयान् तस्य गरीयसः।

२ अत्यन्त अधिक दुर्लभ।

३ योषिदादि परः श्रेष्ठो येषां तैः।

मृत्युं प्रपद्येद्यदि चान्तिकस्थं भयङ्करं[1] दुर्विषहं च सर्वैः ।
आहारनिद्रादिसुखं न[2] भायात् कथं नरः स्यात् स विकर्मकारी ॥३॥
वैराग्यसद्बोधविवर्जितो नरः काम्यादिकर्मादिषु संरतः सदा ।
बद्धः पुनः कर्ममयैः कुपासकैः प्रपच्यते वै नरकेषु जन्मसु[3] ॥४॥
अतश्च बोधाय तथा विरक्तये कुर्यात्सुयत्नं खलु सद्विवेकवान् ।
ताभ्यां च भक्त्या[4] परमात्मलाभतो भवेत्सुतृप्तो ननु[5] निर्वृतः सदा॥५॥
आर्ताश्च[6] जिज्ञासुजनार्थकामुका बुधा भजन्त्येव परेश्वरं सदा ।
आर्ताः सुखार्थं निजबोधलब्धये जिज्ञासवो बोधविशुद्धये[7] बुधाः ॥६॥
अज्ञानतो[8] यद्धि विकर्म जायते तन्नाश्यते जातु सुकर्मणा ह्यपि ।
ज्ञानं विना नैव तु कर्मसंचयः संक्षीयते क्वापि सुकर्मणा तथा ॥७॥
अनन्यभावेन बुधो भजंस्ततो विशुद्धविज्ञानयुतो विराजते ।
न तत्र भेदो न च कर्मजं भयं जन्मादिजं तत्र भयं न जायते ॥८॥
ज्ञानं विना मुक्तिसुखस्य कामुका ज्ञेया जनैस्ते ननु बालिशा[9] नराः ।
कर्मानुसारेण भवन्ति ते सदा सुखस्य दुःखस्य च भाजनानि वै ॥९॥
न कर्मणा कर्मनिबर्हणं[10] भवेदनन्तकल्पार्जितकर्मसंचयः ।
अनन्त एवास्ति तथैव वासनाऽप्यनन्तरूपा खलु विद्यते सदा ॥१०॥
ज्ञानाच्च तुष्टौ नहि कर्म तिष्ठति सवासनं नश्यति मूलनाशतः ।
तुष्टाश्च तिष्ठन्ति हि दम्भवर्जिता बन्धेऽनृतत्वं ह्यवबुध्य तत्त्वतः ॥११॥
ज्ञानाद् विमुक्तिं श्रुतयो वदन्ति बन्धेऽनृतत्वं[11] स्फुटमेव तेन ।
तथैव शश्वद् गुरवो वदन्ति ज्ञानस्य सिद्ध्यै लघुसाधनानि ॥१२॥

---

१ दुःखेन विषह्यते, खल प्रत्ययः परिनिविभ्य इति षत्वम् । २ न भायात्-न रोचेत-तस्मै-इति । ३ जन्मसु-सत्सु । ४ साक्षात्कारतो निष्ठातश्च । ५ ननु-अवश्य । ६ चतुर्विधा भजन्ते मामित्यादि गीता । ७ संशयभ्रमनिवृत्तये श्रवणादिकं बुधाः कुर्वन्ति । ८ प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् । कामतो व्यवहार्यस्तु वचनादिह जायते ॥ १ ॥ याज्ञवल्क्यस्मृतौ । ९ अज्ञाः बालतुल्याः । १० निबर्हणं = बहिष्करणम् । ११ उत्तर ज्ञानादिभिः पूर्वज्ञादीनां सुहृद्दर्शनेन शोकस्य च निवृत्तावपि तत्र नातिव्याप्तिः, तत्त्वज्ञानत्वेन विमोचकत्वस्य विवक्षितत्वात् । तेषां तु विरोधिगुणात्वादिना निवर्तकत्वं न तु तत्त्वज्ञानत्वेन । ये तु सत्ख्यातिवादिनः सत्यस्याप्यन्तःकरणादिबन्धस्य भक्त्या निवृत्तिमभिदधति, तैर्हि "नासतो विद्यते भावो नाभावो विद्यते सतः' इत्यादि शास्त्रमश्रुतमेवेति मन्तव्यम् । यां च सतो रोगस्यौषधि-

शमादिसिद्ध्यै ननु योगमभ्यसेन्निष्कामकर्मादिकमाचरेत् सदा।
शमादिसिद्धौ गुरुपादसेवया बन्धाद्विमुक्तो निजबोधतो भवेत् ॥१३॥
सद्भक्तिकर्मादिषु योगवर्त्मसु सदाऽप्रवृत्ताविह मूढचेतसाम्।
भवेत् प्रवृत्तिर्ह्यवशं कुवर्त्मसु बलात्प्रकृत्या नरके निपातनम् ॥१४॥
ततो ह्यहिंसादियुतेषु कर्मसु सद्भक्तियोगेषु शमादिलब्धये।
भवेत्प्रवृत्तो न नरो विकर्मसु नात्मावघातेषु कदापि संचरेत् ॥१५॥
सत्यात्ममिथ्यात्मभिदां निरीक्ष्य गौणात्मभेदं निपुणो विलोक्य।
तेषामहिंसामथ तद्विहिंसां निरीक्ष्य तेषां हननं न कुर्यात् ॥१६॥
सत्यात्मनोऽज्ञानमथो विपर्ययो हिंसा तदीया कथिता कवीश्वरैः।
अखण्डसौख्यैकरसेन बोधनं भवेदहिंसाविहिता मुनीश्वरैः ॥१७॥
विकर्मवृत्त्या[1] तमसा प्रवृत्त्या हठैर्विपीड्यास्य विपातनं वा।
मिथ्यात्मदेहस्य भवेद्विहिंसा ततोऽन्यथा स्यादविहिंसनं च ॥१८॥
गौणात्मपुत्रस्य च शिष्यवृत्तेरशिक्षणं[2] स्यादतिलालनं च।
विहिंसनं तस्य च शिक्षणादि भवेदहिंसा विहिता श्रुतौ या ॥१९॥

आत्माऽवहिंसनमिदं त्रिविधं वदन्ति,
तस्मात्परं च विविधं मनसा वचोभिः।
कायेन हिंसनमिदं कथितं परेषां,
हेयं सदा भवति तच्च बुधैर्विविच्य ॥२०॥
हित्वैव हिंसनमिदं स्वपरात्मनोर्वै,
कुर्याद्धितं सुमनसा वचसा शरीरैः।
एतद्धि धर्ममनघाः[3] परमं वदन्ति,
तस्यैव साधनमिमे खलु सर्वधर्माः ॥२१॥
यथाशक्ति ह्यहिंसैव कर्तव्या सर्वसज्जनैः।
अशक्ये लघु चाश्रित्य महत्तद्धिंसनं त्यजेत् ॥२२॥

---

भिर्निवृत्तिं कथयन्ति, तत्कारणे लयमात्रम् भवति, पुनरपि रोगोत्पत्तेः, प्रकृते च पुनरुत्पत्तिरहितः सकारणबाधो मोक्षशब्दार्थत्वेन विवक्षित इति संक्षेपः।

१ विकर्मणि-विरुद्धेनिन्दिते कर्मणि वृत्तिः स्थितिस्तया, किम्वा विकर्मणो वर्तनमाचरणं तेन। तमसा=तमोगुणेन मोहेन या प्रवृत्तिस्तयेत्यर्थः॥ २ शिष्यस्य वृत्तिर्यस्मिन्तस्य। ३ अहिंसैव परोधर्मः शेषास्तु व्रतविस्तराः। अस्यास्तुपरिरक्षार्थं पादपस्य यथाऽऽवृत्तिः ॥१॥ अहिंसैव मतामुख्या स्वर्गमोक्षप्रसाधिनी। अस्यास्तु-परिरक्षार्थं न्याय्यं सत्यादिपालनम् ॥२॥ "महाभा० अनुशासनप० अ० ११५"

आत्महिंसा न कर्तव्या कदाचिदपि सज्जनैः ।
जीवन् सर्वं नरः कुर्यान्मृतः किं स करिष्यति ॥२३॥
अहिंसाद्यैः सुसंसाध्य शुद्धं चेतो निजात्मनि ।
स्थापयेन्नैव[1] चान्यत्र भवबन्धविमुक्तये ॥२४॥
कायेन विहितं कर्म हिंसाकल्कादिवर्जितम्[2] ।
कामदम्भादिकं त्यक्त्वा शुद्ध्यै कुर्यादगर्वितः ॥२५॥
शास्त्रैश्चविहिते मार्गे जुगुप्सा चेद् भवेत् क्वचित् ।
स्वप्रियत्वाद्धि[3] धर्मस्य तमधर्मं परित्यजेत् ॥२६॥
अशक्तोविहिते मार्गे निन्दितं न समाचरेत् ।
तत्रापि च परीक्षेत देशकालादि सर्वतः ॥२७॥
कायेन मनसा वाचा यद्यत्कर्म समाचरेत् ।
बुद्ध्या विशुद्धया नित्यं तद्ब्रह्मणि समर्पयेत् ॥२८॥
सर्वं करोति वै ब्रह्म मायया सुविकल्पितम् ।
वस्तुतः क्रियते नैव न करोत्यद्वयत्वतः ॥२९॥
द्वितीयाऽभिनिवेशेन[4] भयं भवति नान्यथा ।
आभजेत ततोऽद्वैतं गुरुदेवात्मविन्मुनिः ॥३०॥
योऽस्त्यात्मा यश्चरामो विभुविभवशाली[5] गुणनिधिः,
यश्चास्ते सर्वदेवो दिवि भुवि विलासी सुखनिधिः ।
सर्वं भूत्वा प्रकृत्या विलसति सदा यो गुणपरः,
तदेवस्यैव भक्त्या पुनरपि गुणान्धो न भवति ॥३१॥
वेधोविष्णुहरेष्वेवं त्रिगुणेष्वपि कुत्रचित् ।
तावन्मात्रे ह्यलं बुद्धिं कृत्वा सक्तो निबध्यते ॥३२॥

---

१ यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् । ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ १ ॥ प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् । उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २ ॥ "श्रीमद्भ० गी० अ० ६ । २६-२७"
२ कल्कः-पापाशयः । ३ वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ १ ॥ "मनुस्मृ० अ० २।१२"
४ अभिनिवेशोऽत्राऽऽग्रह आशक्तिः "भेदबुद्धौ भवेदेतदवश्यं विदुषामपि । रागोद्वेषो भयं मोहो मदोद्वन्द्वानि सर्वशः ॥१॥ इति निश्चित्य सद्वाक्यैर्वेदान्तैः स्वमनीषया । भेदबुद्धिं परित्यज्य सदद्वैतं सदा श्रयेत् ॥२॥"
५ विभवैः सर्वज्ञत्वादिभिः शलते-सर्वान् संवृणोति = इति विभवशाली,

तत्रापि च विवेकेन परिपश्यँश्चिदव्ययम् ।
तत्तत्[1] तत्त्वमपि ध्यायन् मुच्यतेऽहिंसको नरः ॥३३॥
सर्वेभ्यः सारमादद्यान्मध्ये नैव वसेत् कचित् ।
अन्तप्राप्तौ सयत्नः स्यान्मानुष्यं तस्य शोभते ॥३४॥

गुरुं हि मत्वा भवमानवं जना भवन्ति तुच्छस्य फलस्य भागिनः ।
शुद्धं विदित्वा खलु बोधदृष्टितो महाफलं प्राप्यपलायते भवात् ॥३५॥
लोकेषु देवेषु जनेषु चैवं शनैर्विदित्वा परमात्मरूपम् ।
स्वान्तेषु चैवं परिचिन्तयन् तं जनो विमुक्तो भवति त्वसङ्गः ॥३६॥
आत्मैव[2] वेधा च हरो हरिश्च गुणं समाश्रित्य पृथङ् न तादृक् ।
इदं समस्तं जगदात्मरूपं तेष्वस्ति बोधश्च बलं न चात्र ॥३७॥
यदा जनो भिन्नतया निषेवते गुणाँस्तदा सेव्यतया स पश्यति ।
गुणात्मिकेयं ननु बन्धनप्रदा माया तयाऽसौ त्ववशं निबध्यते ॥३८॥
यदा जनोभेदमपास्यदूरतो निषेवते कापि परं चिदव्ययम् ।
तदा विधूयात्मसुबोधतो ह्यमूं परात्परे ब्रह्मणि मोदते सदा ॥३९॥
आत्मैवरामः स च कृष्ण उच्यते ब्रह्मैव चात्मा न ततः पृथग्घि सः ।
योग्यादिभिर्ध्येयतया विवक्षितो रामेति शब्देन निगद्यते परः ॥४०॥
अरींश्चकर्षन् सहिकृष्णशब्दभाग् ब्रह्मेति बृद्धेरभियोगतो भवेत् ।
प्राणान् विकर्षन् स च जीवशब्दको मायां वशीकृत्य परेश्वरो भवेत् ॥४१॥
स्वयं न जीवो न च वा परेश्वरस्तथापि रामो रमतेऽत्र सज्जनः ।
धैर्येण सद्धारणया च संयुतो विभेदमुक्तः स जनो विराजते ॥४२॥
उपाधिभेदान्निखिला भिदा भवेदुपाधिभेदो हि गुणप्रभेदतः ।
गुणेषु भेदो मलशुद्धिभेदतस्तयोस्तु भेदः कृतकर्मतो भवेत् ॥४३॥

---

विभुश्चासौ विभवशालीति । १ एतदभिप्रायेणैवोक्तम् 'रजगुण ब्रह्मा तमगुण शङ्कर सत्त्वगुणी हरि सोई' सर्वात्मा राम एव तत्तद्गुणैर्ब्रह्मादिनामको भवतीत्यर्थः । तत्तन्नामा देवविशेषा जीवास्त्वन्य एव, तत्रापि च तत्तद्गुण-विशिष्टरामस्य ब्रह्मण एवशक्त्योऽभिव्यज्यन्ते इति भावः । २ यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावस्तस्मादात्मेति गीयते ॥१॥ ऋषिः सर्वगतत्वाच्च शरीरी सोऽस्य यत्प्रभुः । स्वामित्वमस्य यत् सर्वं विष्णुः सर्वप्रवेशनात् ॥२॥ भगवान् भगवद्भावान्निर्मलत्वाच्छिवः स्मृतः । परमः सम्प्रकृष्टत्वादवनादोमिति स्मृतः ॥३॥ "लिङ्गपु० ७०'९६ ९८"

कर्मादिभेदः खलु पूर्वदोषत उपाधिभेदाच्च हि तत्र भिन्नता।
चक्रेण तुल्या परिवर्तमानता हीत्थं त्वनादिः किल वर्तते भवे ॥४४॥
तत्रैव मूढः परिवर्तमानो बिभेति शश्वन्निजकर्मदोषात्।
विद्वान् विलूयात्र विभेदजातं विराजते दोषभयादिमुक्तः ॥४५॥
अनादिभेदस्य भवस्य मूलतो निवृत्तये वित्तिरलं निजात्मनः।
विचारवैराग्यशमादितश्च सा प्रलभ्यते कामकलाविवर्जितैः[1] ॥४६॥
निजात्मनस्तावदयं विचारः सर्वैर्विधेयो ननु बोधसिद्धये।
आत्माऽस्त्यणुः किं स हि देहमात्रे किम्वा विभुः सर्वजनानुविद्धः ॥४७॥
तस्यात्यपणुत्वे हि कथं त्विहस्थाः सूर्यं प्रपश्यन्ति जना दिविस्थम्।
गत्वेन्द्रियं नैव निवेदयेत्तं जडत्वतो नैव मनोऽपि तस्मात् ॥४८॥
गत्वापि नात्मैव हि बुध्यते तं गत्वागतौ संहननं[2] विनश्येत्।
आलातवद्भ्राम्यति चात्मचेतः[3] कथेति वेद्या ननु वेदबाह्या ॥४९॥
स्वान्तस्य नेत्रस्य तु तैजसत्वात्स्वच्छत्वतो वृत्तिरथो प्रदीप्तिः।
मूलं ह्यहित्वैव तु वर्ततेऽलं दूरात्सुदूरे सति तायमाना[4] ॥५०॥
प्रदीपवत्तच्च निजात्मनोऽन्यथा संकोचविस्तारयुतं विवेकिभिः।
प्रदृश्यते नात्मनि सम्भवेत्तथा ध्रुवं ह्यनित्यत्वमुखास्तथा सति ॥५१॥
अतो नचात्मा खलु देहमात्रके विभुः सदा सर्वत एव विद्यते।
तेन त्विहस्थोऽपि रविं प्रपश्यति वित्तेर्व्यवस्था ननु बुद्धिभेदतः ॥५२॥
आत्मा न देहो न मनो न बुद्धिर्नैवेन्द्रियं प्राणमुखा न केऽपि।
जडत्व दृश्यत्वविकारयोगादात्मास्त्यसङ्गश्चितिमात्ररूपः[5] ॥ ५३ ॥
ज्ञातत्वयुक्तं च स एव पश्यति ततोऽन्यथा सर्वजगत् स पश्यति।
सर्वान् विकारांश्च विकारिणं सदा स्वयं प्रकाशः स विकारहीनः ॥५४॥
भूमेः परोऽयं च ततः परोऽयमित्थं प्रधावन् हि जनस्त्विहान्ते।
नेतः परं वेद्मि किमस्ति किन्नो ह्यास्ते त्वनन्तं किमपि प्रजाने ॥५५॥

---

१ कामांशकामकलनामूलवृद्धिरहितैः। २ शरीरम्। ३ आत्मसहितं चेतः, आत्मनो वा चेतश्चित्तम्। ४ सर्वस्य सत्ताप्रदेसति-आत्मनि कर्मवासनादिभिस्तायमानेत्यर्थः। जीवात्मभिन्नेश्वरे तायमाना तु न जीवभोगव्यवहारादीनां सिद्धये समर्था स्यादित्यनुसंधेयम्। ५ अस्यैवात्मनः, तत्त्वमसि। "छा० ६।८.७" प्रज्ञानं ब्रह्म। "ऐतरेय० ३।५।३" अयमात्मा ब्रह्म। "बृ० २।५।१९" इत्यादिश्रुत्यैकत्वबोधनं क्रियते। "साधो सो सद्गुरु मोहि भावै। यह मन जाय जहाँ लगि जबही, परमातम दरशावै॥" इत्यादि च।

इत्थं ह्यनन्तं प्रवदन्ति सर्वे जानन्ति सर्वे च विकारसंघान् ।
मनोमुखानां नहि ते विकारैर्जातु प्रवेद्या ह्यखिला भवेयुः ॥५६॥
रविश्चक्षुसो देवतेत्याह शास्त्रं[1] प्रकाशो रविर्नास्ति तेनानवस्था ।
तथैवायमात्मा स्वयं ज्ञानरूपो जगद्भासयन् वर्तते तैरसङ्गः ॥५७॥
सदेकं[2] प्रभुर्निर्भयं निर्विकारं, श्रुतं यच्छ्रुतौ ज्ञानमात्रं निरीहम् ।
तदेवाभयं निर्गुणं निर्विकल्पं, निजात्मास्ति देवोऽद्वयो दोषहीनः ॥५८॥

योऽसङ्गः सर्वसाक्षी निरवधिपरानन्दरूपोऽद्वितीयः,
इच्छादिद्रष्टृरूपस्तनुमतिमनः प्राणसंघप्रदीपः ।
सर्वस्मात्प्रेष्ठरूपो विहरति किरन् सौख्यलेशं पुरेषु,
सर्वज्योतिः प्रशान्तौ विलसति यो ज्योतिषा स्वेन सात्मा ॥५९॥

यश्चेन्द्रियै र्बाह्यगुणान् प्रपश्यति,
बुद्ध्येन्द्रियं तामपि भासयन् स्वयम् ।
शुद्धो ह्यसौ तत्र गुणस्य विस्तृति-,
र्मायामनोऽध्यासमयैरुपाधिभिः[3] ॥६०॥

यस्मादुदेति लयमेति च यत्र विश्वं,
मायामयं हि सुचिरं परिपाल्यते च ।
शास्त्रैकवेद्यसुखबोधसदात्मको यो,
ज्ञात्वा तमेव सुचिरं परिमोदतेऽलम् ॥६१॥

पृष्टस्तमेव निजशिष्यवरेण केनचित्,
तन्वादिसर्वविरसेन रसात्मलब्धये ।
हृष्टो दयादिगुणपूर्णकलेवरो गुरुः,
सत्यं ह्युवाच तदिदं सुजनै र्निशम्यताम् ॥६२॥

---

१ सूर्यस्य स्वयं प्रकाशरूपत्वात्सजातीयप्रकाशान्तरापेक्षानास्ति, न वा देवतारूपस्य तस्य चक्षुषो देवतान्तरं सम्भवति । तथैवात्मनि सजातीयप्रकाशान्तराभावो ज्ञातव्यः । विजातीयप्रकाशस्य तु मायिकत्वेन मिथ्यात्वजडत्वादिभिः पराहत्वादपेक्षाशंकैव नोदेति विदुषामिति तत्त्वम् "छान्दोग्य भाष्ये, अ० ५'१।१५" । प्राणसम्वादीये तु, कार्यकरणवतीनां देवतानामकरण ईश्वरो नियन्ता प्रोक्तः स च "अपाणिपाद" इत्यादि श्रुत्यनुसारेण सर्वकार्यकरणहीनोपि सर्वं कर्तुं समर्थः । २ सदेकमित्यादि ब्रह्म श्रुतम् । "प्रभुरीश्वरः श्रुतः" इत्यादि । ३ यत्तु केचित् सूर्यवत् स्वयं प्रकाशे ज्ञानस्वरूपे ब्रह्मणि नाध्यासरूपाया अविद्यायाः सम्भवो ज्ञानाज्ञानयो र्विरोधादतस्तद् भिन्नेऽल्पशक्तौ जीवेऽध्या-

वस्तुतोऽपृष्ट एवेदं प्रोक्तवान् सर्वसिद्धये ।
श्रुत्वा मत्वा च तत्सर्वं सर्वे सिद्धा भवन्तु वै ॥६३॥
तत्त्वमस्यादि वाक्येन दशमोऽसीति वाक्यतः ।
सोऽयमित्यादि सद्वाक्यैरपरोक्षा मति र्यथा ॥६४॥
तथैव सद्गुरो र्वाक्याद्विचारसहितादिह ।
अपरोक्षात्मविज्ञानमुत्तमस्योपजायते ॥६५॥
उत्तमो मध्यमो वापि कनिष्ठोऽभ्यासतत्परः ।
श्रुत्वा मत्वा गुरुं ध्यात्वा स्वात्मानं प्रतिपद्यते ॥६६॥
श्रुत्वा सर्वं नरो भक्त्या ध्यात्वा गुरुपादाम्बुजम् ।
आत्मानं हरिमव्यक्तं ज्ञात्वाऽध्यक्ष विमुच्यते ॥६७॥
हिंसां दम्भं मदं हित्वा लब्ध्वा सुकृतमुत्तमम् ।
शोधयित्वा स्वकं स्वान्तं लभेत हरिमञ्जसा ॥६८॥
रसोद्रेकं जनः श्रुत्वा कृतं हनुमतात्विदम् ।
रसान्मुक्तो[1] रसं प्राप्य रसायामपि राजताम् ॥६९॥

* इति सम्बन्धग्रन्थः सम्पूर्णः *

---

सादि सर्वसंसार इत्यादि वदन्ति, तैस्तावदिदं नालोचितं यद्यथा स्वयंप्रकाशे सूर्ये तमः सत्तां न लभते तथा तदाश्रिते तत्सन्निधावपि क्वचित्तमो न दृश्यते, तद्वद्ब्रह्माश्रिते जीवे ब्रह्मसन्निधौ वाऽविद्या कथं सत्तां लभेत, यदि ब्रह्मस्वरूपं ज्ञानं तद्विरोधि स्यादित्यकामेनापि, ब्रह्माविद्याया अविरोधि, विद्याऽविद्यात्मकस्य सर्वस्य साधकं साक्षिस्वरूपमेवेत्यभ्युपगन्तव्यम् । तथा च ब्रह्माकारवृत्तीद्धचेतनेनैव व्यष्ट्यविद्यानिवृत्तौ जीवानां मुक्तत्वमप्युपपद्यते, इति सर्वं सुस्थमेव । ब्रह्मणि चाज्ञानादीनां कल्पनासत्त्वेऽपि तत्स्वयं प्रकाशसर्वविदेव, जीवानामेवाज्ञत्वात् । ज्ञाज्ञौ द्वावजावीशाऽनीशौ, इत्यादि श्रुतयोपि संगच्छन्तेतरामितिदिक् ।

१ रसात्–रागात् । रसं–ब्रह्मानन्दम् । रसायाम्–पृथिव्याम् । राजताम्–जीवन्मुक्तो भवतु ।

* ओम् राम *

श्रीसद्गुरु

# कबीर साहब कृत बीजक

[स्वानुभूतिसंस्कृत स्वाल्पाक्षराहिन्दीव्याख्यासहित]

## ❀ अथ प्रथम रमैनी प्रकरण ❀

### रमैनी १, सृष्टि प्रकरण १

**जीव रूप एक अन्तर वासा। अन्तर जोति कीन्ह प्रकाशा॥**

जीवात्मैको[1] वसत्यन्तर्भासयन्निखिलं जगत्।
अन्तर्ज्योतिर्हि[2] भूतानां सर्वेषां विमलं महः॥१॥
प्रकाशकोऽद्वयः सैव त्वन्तर्यामी परेश्वरः।
साक्षी सर्वस्य विश्वस्य स सत्यानन्दविग्रहः॥२॥
वाय्वग्निरविवत्सैक उपाधिष्वेव भिद्यते।
आभासैर्बुद्धिमायासु तच्छास्त्रेऽत्रापि च स्फुटम्॥३॥

---

१ जीवस्वरूपेणोपक्रमस्तु वेदितव्ये वस्तुनिपरोक्षत्वात्यप्रसिद्धत्वादि भ्रम-निवारणाय, भ्रमेणैवाप्राप्तप्रतीत्तिनिराकरणाय चेत्यादि स्वयमूहनीयम्। जीवानां व्यावहारिकाणामात्मेतिविग्रहः। "साक्षिणः पुरतोभाति लिङ्गदेहेन संयुतम्। चितिच्छायासमावेशाज्जीवः स्याद् व्यावहारिकः॥ वाक्यसुधा० १६" सर्वेन्द्रियसमायुक्त प्राणान्तःकरणात्मके। लिङ्गेऽविद्यासमायुक्तं चैतन्यं प्रति-विम्बतम्॥१॥ व्यावहारिकजीवस्तु क्षेत्रज्ञः पुरुषोऽपि च। स एव जगतां भोक्ताऽनाद्ययोः पुण्यपापयोः॥२॥

२ योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः। "वृ० ४।३।७" तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्॥ "वृ० ४।४।१६" प्रधानता से जीवों के एक अन्तरात्मा कहा गया है, सब भूतभौतिक चराचर का सत्यान्तरात्मा एक विभु ब्रह्म है, और सबका अन्तर्ज्योति होने से सूर्यादि ज्योतियों का भी अन्तर्ज्योति है।

अनौपाधिकतत्त्वस्य ज्ञानान्मोहतिरस्कृतौ ।
जीवन्मुक्तोविमुक्तश्च जीवो ब्रह्मत्वमश्नुते ॥४॥
ब्रह्मात्मा मङ्गलात्मैव तन्निर्देशोऽत्र विद्यते ।
गणवर्णकृतो दोषो विद्यते नात्र कश्चन ॥५॥
"देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे नैवनिन्द्याः स्यु र्गणतो लिपितोऽपिवा" ॥६॥

---

चिदानन्दघन ब्रह्म का, सद्गुरु का धरि ध्यान ।
भाषाभणित कि भणिति शुभ, भाषा सुनहु सुजान ॥१॥

जिस निज सत्य स्वरूप के अज्ञान से व्यावहारिक जीव कामादिवश पाप पुण्य करके चौरासी लाख योनि आदि में भ्रमते हैं और जिसके ज्ञान से कामादि को नष्ट करके मुक्त सुखी होते हैं, सो सब जीवों का सत्य स्वरूप आत्मा एक अखण्ड अविनाशी है और भूतभौतिक सब संसार सब शरीर के अन्दर बसने वाला है तो भी सबसे असङ्ग है । "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरणवाणि" इत्यादि श्रुतियों के अनुसार शरीरों में जीवरूप से निवास करता है और सबके भीतर में ज्योतिः ( प्रकाश = ज्ञान ) स्वरूप से सबका निर्विकाररूप से प्रकाश किया है और कर्ता है, बुद्धि आदि उपाधियों के भेद से आभास प्रतिबिम्ब तुल्य व्यावहारिक जीवों के स्वरूपों में भेद रहता है, सत्यात्मा में नहीं, सो ६४ शब्द और १० कहरा आदि में स्पष्ट वर्णित है ।

आदिमध्यावसानेषु यरता यान्ति लाघवम् ।
भजसा गौरवं यान्ति मनौ तु गुरुलाघवम् ॥१॥
मो भूमिः श्रियमातनोति य जलं वृद्धिं रचाग्निर्मृतिम् ।
सो वायुः परदेशदूरगमनं त व्योम शून्यं फलम् ॥२॥
य सूर्यो (भयं) रुजमाऽऽददाति विपुलं भेन्दुर्यशोनिर्मलम् ।
नो नाक (ग) श्च सुखप्रदः फलमिदं प्राहुर्गणानां बुधाः ॥३॥

आदि मध्य और अन्त में लघु ( ह्रस्व ) अक्षर के होने से यगण, रगण और तगण होते हैं और इसी प्रकार गुरु (दीर्घ) अक्षर के आदि मध्य अन्त में होने पर भगण, जगण और सगण होते हैं और सर्वगुरु वाला मगन, सर्वलघु वाला नगन होता है ॥१॥ मगन का भूमिदेव है सो लक्ष्मी का विस्तार करती है, यगण का जलदेव है सो आयु आदि की वृद्धि करता है । रगण का अग्निदेव है सो मरण फल देता है । सगण का वायुदेव है सो दर देश-

इच्छा रूप नारी अवतरी । तासु नाम गायत्री धरी ॥
तिहि नारि के पुत्र तिनि भाऊ । ब्रह्मा विष्णु महेश्वर नाऊँ ॥

अन्तर्ज्योतिः स्वरूपस्य साक्षिणः परमात्मनः ।
अहमेको[1] बहुः स्यां वा एवमिच्छा ह्यजायत ॥७॥
मायाऽऽविष्टस्य[2] तस्यैव त्विच्छात्मैवोत्तमावधूः ।
अवतीर्णा हि गायत्री नाम्ना साऽऽसीद्युता सती ॥८॥
त्रयस्ते भ्रातरस्तस्याः पुत्रा जाता अयोनिजाः ।
प्रभावैरसमाः सर्वे ब्रह्मविष्णुहराभिधाः[3] ॥९॥

गमन फल देता है, तगण का आकाशदेव है, उसका शून्य फल है, यगण का सूर्यदेव है, वह विपुल रोग या भय फल देता है, भगण का चन्द्रदेव है सो निर्मल यश देता है, नगण का स्वर्ग या नागदेव है सो सुखप्रद होता है, यह गणो का फल विद्वान् कहते हैं ॥२-३॥ एवं क१, ख२, ग३, घ४, च५, छ६, ज७, ड८, द६, ध१०, न११, य१२, श१३, स१४, क्ष१५, ये शुभाक्षर कहे जाते हैं और ङ१, झ२, ञ३, ट४, ठ५, ण६, त७, थ८, प६, फ१०, ब११, भ१२, म१३, र१४, ल१५, व१६, ष१७, ह१८ ये अशुभाक्षर कहे जाते हैं। तहाँ—

दीजो भूलि न छन्द के, आदि झ, ह, र, भ, ष, कोय ।
दग्धाक्षर के दोष ते, छन्द दोषयुत होय ॥१॥
मङ्गल सुर वाचक शब्द, गुरु होवै पुनि आदि ।
दग्धाक्षर को दोष नहिं, अरु गण दोषहुँ वादि ॥२॥

मायी उस ज्योति स्वरूप से इच्छा रूप नारी ने अवतार लिया ( प्रकट हुई) देवीभागवत के अनुसार उसका गायत्री नाम धरा गया । उसी नारी के मानस पुत्र ब्रह्मा, विष्णु, महेश नामवाले तीन भाई इस भूमि पर प्रकट हुए ।

---

१ सोऽकामयत, बहुः स्याम्, प्रजायेयेति । (तैत्तिरीय० २।६।४)

२ मायाशब्देनात्रानिर्वचनीयं भावभूतं वस्त्वभिधीयते, यद्धि "न सदासीन्नासक्ष्सीद्" इत्यादिश्रुतौ तमः शब्देन प्रसिद्धम् । लोकेऽपि मायाविनिर्मिते गन्धर्व नगरादौ बाधार्हे मायाशब्दवाच्यत्वं प्रसिद्धम् ।

३ ब्रह्मणोऽपि गुणसम्बन्धविवक्षया ब्रह्मबिष्णुहरादि पदवाच्यत्वं भवति । तच्च "रजगुण ब्रह्मा" इत्यादिना ८२ इति शब्देऽभिहितम् । शास्त्रे च प्रसिद्धम् । जीवरूपा देवा अपि ब्रह्मादिपदवाच्या भवन्ति, ते च साधारण जीवेभ्यो विलक्षणाः सामर्थ्यविशेषयुक्ता भवन्ति, तच्च "ब्रह्मा को दीन्हों

**तब ब्रह्मा पूछल महतारी । के तब पुरुष तुँ केकर नारी ॥**
**हम तुम तुम हम और न कोई । तुमहिं पुरुष हमहिं तोर जोई ॥**

जनिं लब्ध्वा विकल्पैतज्जगच्चैव चराचरम् ।
जिज्ञासायां पुरा ब्रह्मा त्वपृच्छद् भ्रातृसन्निधौ ॥१०॥
मातरं विनयेनैव कोभर्ता तव विद्यते ।
भवति ! कस्य भार्यासि ब्रूहि श्रोतुं क्षमं यदि ॥११॥
श्रुत्वा तच्चात्रवोन्माता तत्त्वदृष्ट्या न लोकतः ।
यस्त्वं साऽहमहं त्वं च नान्यः सत्योऽत्र विद्यते ॥१२॥
आवयोरात्मनि स्वच्छे भिदालेशो न विद्यते ।
सदैव मत्स्वरूपस्त्वं त्वदात्माऽहं न संशयः ॥१३॥
पुरुषो ब्रह्मदृष्ट्या त्वं भार्या तेऽहं गुणात्मिका ।
शक्ति महेशितुर्देवी गायत्री शुभनामिका ॥१४॥

तब ( जन्म लेने पर ) प्रवृत्ति के स्वभाववाले राजस ब्रह्मा ने अनादि स्त्री पुरुष के संस्कारों की अभिव्यक्ति से माता से पूछा कि तेरा पुरुष (पति) कौन है, तूँ किसकी नारी ( स्त्री ) है । तब माता प्रथम आत्मदृष्टि से बोली कि हम तेरा स्वरूप हैं, तुम मेरा स्वरूप हो, क्योंकि "योऽसौ साऽहंमहं योऽसौ भेदोऽस्ति मतिविभ्रमात्" जो वह परमात्मा है सो मैं हूँ, और मैं हूँ सो परमात्मा है, भेद तो बुद्धिगत भ्रम से है । अतः सत्यात्मा सबका एक है, और आत्मा से अन्य कोई वस्तु सत्य नहीं है । और तुम ही उस सत्यात्मा पुरुष स्वरूप हो ( तत्त्वमसि ) उससे भिन्न नहीं हो । मैं भी तेरा स्वरूप होता हुआ भी (आत्मदृष्टि से अभिन्न होता हुआ भी) इच्छा (माया) रूप से तेरी जोई (योनि) उत्पत्ति का कारण हूँ ( तेरे व्यावहारिक स्वरूप का हेतु हूँ ) और अन्यपति के बिना चेतनात्मा की सत्ता प्रकाश से ही भोगादि को सिद्ध करनेवाली स्त्री हूँ । तुम सबके लिये सरस्वती आदि को सिद्ध करनेवाली हूँ । "गृहाणेमां विधे ! शक्तिं सुरूपां चारुहासिनीम् । देवीभा० स्क० ३।३" इत्यादि द्रष्टव्य है । सब देवादि की शक्तियों का और सब प्राणी के निद्रादि का वर्णन ( दुर्गासप्तसती ) में द्रष्टव्य है, इसी एक चेतनात्मा और माया को कहा गया है कि "एके पुरुष एक है नारी । शब्द ५" इत्यादि ।

---

ब्रह्मण्डा" इत्यादिना निरूपितम् । 'अत्रत्यो विषयो' । (देवीभागवते स्क० ३ अ० ३ ४।५।६ ) इत्यत्र द्रष्टव्योस्ति । "इच्छापरात्मनः कामं नित्यानित्य स्वरूपिणी" इत्यादि । देवीभागवत के वचन हैं ।

साखी—बाप पूत की एके नारी, एके माय बियाय।
ऐसा पूत सपूत न देखा, बापहिं चीन्है धाय ॥१॥

ईशजीवात्मनोरेवं मायैका महिला मता।
जननीपुत्रवर्गस्य सैवावस्थाप्रभेदतः ॥१५॥
तादृशश्च सुपुत्रा नो दृश्यन्ते भुवनत्रये।
बहवो ध्यानतोयेऽत्र जानीयुः पितरं निजम् ॥१६॥
असङ्गं सच्चिदानन्दं भिन्नं तु मतिविभ्रमात्।
स्वात्मनश्च सदाऽभिन्नं कर्तारं मायया किल ॥१७॥

आत्मैव योषा पुरुषो निगद्यते काङ्क्षादिकामादिसमाश्रयात्[1] किल।
स्वयं न योषा पुरुषश्च कथ्यते मास्यन्[2] जगन्मातृतया स उच्यते ॥१८॥
स एव माया परिमोहितश्च, तोकादिभावैः[3] परिवर्तमानः।
कर्मादियोगं विदधन् पितापि, ज्ञानेन मुक्तः परितृप्तिमेति ॥१९॥१॥

ईश्वर रूप इच्छा कर्ता बाप (पिता) और व्यावहारिक जीवरूप पुत्र की मायारूप एक ही नारी है। अर्थात् एक प्रकृति शुद्ध सत्त्व की प्रधानता से माया कही जाती है, सो ईश्वर की उपाधि है, मलिन सत्त्व की प्रधानता से अविद्या कही जाती है, सो जीव की उपाधि है, ईश्वर उस माया में कर्मादि बीज को धरकर तामसी माया से भूतभौतिक वस्तु को उत्पन्न करता है, और जीव उस माया रचित संसार में भोग पाता है। अतः एक माया अविद्या माता होकर चराचर पुत्रों को बिआती (उत्पन्न करती) है। तहाँ ऐसे सपूत (सुपूत) नहीं देखे जाते हैं कि जो शुद्ध पिता के ध्यान करके उसको प्रत्यक्ष समझें कि जिससे उसके अज्ञानज बन्ध से मुक्त हो जायँ। अर्थात् ऐसे बहुत कम जीव होते हैं। साखी का हरिपद छन्द है। लक्षण है कि "विषम हरीपद कीजिये सोलह, सम शिव दे सानन्द। हरिपद गाइ हरिहि नित ध्याइय, पाइय परमानन्द ॥१॥ हरिपद छन्द के विषम ( प्रथम, तृतीय ) चरणों में सोलह-सोलह मात्रा कर्तव्य हैं, सम ( द्वितीय चतुर्थ ) चरणों में शिव ( रुद्र एकादश = ग्यारह ) मात्रा कर्तव्य हैं, अन्त में 'नन्द' गुरु लघु साथ रहना चाहिये ॥१॥"

---

१ काङ्क्षादि (प्रबलकामादि)। कामादि (वीर्यादि)। सम्यग् आश्रयणात्।
२ मास्यन्=जगत् (जगत् को मापता हुआ स्वाधीन करता हुआ)।
३ तोकम् (अपत्यम्-सन्तन्तिः)।

सम्बन्ध "अयमात्मा ब्रह्म" इत्यादि के समान प्रत्यक्षात्मा के ज्ञानपूर्वक परोक्ष विभु सर्वात्मा ब्रह्म को समझाने के लिये प्रथम जीव स्वरूप से उपदेश का आरम्भ हुआ है। तहाँ केवल जीव के सत्य ज्योतिःस्वरूप से इच्छा द्वारा ब्रह्मा आदि की उत्पत्ति की प्रतीति होती है। परन्तु मायारूप शक्ति के बिना उत्पत्ति हो नहीं सकती है। अतः मायायुक्त ब्रह्मात्मा से उत्पत्तिका वर्णन करते हुए पूर्वोक्त सामान्य अर्थ का विशेषरूप से वर्णन करते हैं, सामान्य अर्थ के बाद विशेष का वर्णन ही उचित होता है।

## रमैनी २

**अन्तर जोति शब्द[1] एक नारी। हरि ब्रह्मा ताके त्रिपुरारी ॥**
**ते तिरिये भगलिङ्ग अनन्ता। तेउ न जानल आदिउ अन्ता ॥**

एकोऽयं वर्तते ह्यन्त र्ज्योतिरात्मा परं महः।
सत्यश्चापरिणामो स ह्यखण्डानन्दविग्रहः ॥२०॥
द्वितीया वर्तते माया शब्दादि जननी च सा।
परिणामिन्यनित्या चाऽसत्या शब्दादि रूपिणी ॥२१॥
ताभ्यामेव च जायन्ते हरिब्रह्ममहेश्वराः।
यशस्विनो महावीर्यास्तपःस्वाध्यायतत्पराः ॥२२॥
सत्त्वादिगुणशालिन्या मायया सहिता हि ते।
सृजन्ति विविधं लोके वनितापुंमयं जगत् ॥२३॥
तेभ्यश्च जज्ञिरे चातः स्त्रीपुंसाः खल्वनन्तकाः।
तेऽपि नैवाविदुर्देवं सर्वस्याद्यन्तलक्षणम् ॥२४॥
गुरुं विना न यं देवा अविदुर्वै कथञ्चन।
वेदिष्यन्ति कथं तं हि केपि सद्गुरुमन्तरा ॥२५॥

सबके अन्तर (भीतर) में वर्तमान परम सूक्ष्म ज्योतिस्वरूप सर्वात्मा ब्रह्म एक है और जिसमें ओंकारादि शब्दपूर्वक वेदादि की सब नामरूप की सृष्टि का शास्त्र में वर्णन है उसकी अव्यक्त शब्दादिरूप नारी प्रकृति (माया) भी एक है। उन दोनों से जन्य उस व्यक्त स्वरूप गायत्री के पुत्र हरि ब्रह्मा

---

१ शब्द इति चेन्नातः प्रभवत्वात्प्रत्यक्षानुमानाभ्याम्। "ब्रह्मसूत्र १।३।२८" विग्रहयुक्त (शरीरी) देव के होने पर, शरीरी देव के, उसके वाचक शब्द के और शब्दार्थ सम्बन्ध के अनित्य होने से, वेद में नित्यता मूलक प्रामाण्य का अभाव होगा, इस शंका का उत्तर दिया गया है कि वैदिक शब्दों से ही

त्रिपुरारि (शिवजी) हुए। फिर मायिक शक्ति सहित ते (उन) तिरिये (हरि आदि तीनों) से अनन्त भग लिङ्गवाले स्त्री पुरुष हुए। परन्तु गुरु विचारादि के बिना वे लोग भी सब संसार के आदि अन्त स्वरूप (उत्पत्ति प्रलय का अधिष्ठान स्वरूप) सत्यात्मा को नहीं जान सके, तथा "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥१॥ समग्र-ऐश्वर्य, धर्म, यश, लक्ष्मी, ज्ञान, वैराग्य, इन छवों का भग यह इङ्गना=नाम है और उन हरि आदि तीनों में इन भगों के लिङ्ग अनन्त रहे, ऐश्वर्यादि के चिन्ह बहुत रहे तो भी गुरु आदि के बिना आदि अन्त को नहीं जान सके। अतः गुरु आदि प्राप्तव्य हैं। गुरु तथा विचारादि से ज्ञातव्य है कि "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्तीति। तैत्तिरीय० ३।६" "सर्वं खल्विदं ब्रह्म तज्जला-निति शान्त उपासीत। छा० अ० ३।१३" आनन्द स्वरूप ब्रह्म से ही सब ये प्राणी अग्नि विस्फुलिङ्ग के समान उत्पन्न होते हैं, उत्पन्न होने पर आनन्द से जीते हैं और प्रलय को प्राप्त होते हुए आनन्द में ही अभिसंवेश (प्रवेश-स्थिति) करते हैं। अतः आनन्दस्वरूप ब्रह्म सबका आदि अन्त स्वरूप है। अतएव यह सब संसार ब्रह्म स्वरूप ही वस्तुतः है, इसलिये राग-द्वेषादि को त्याग कर, तज्ज (ब्रह्मजन्य) तल्ल (ब्रह्म में लयवाले) और तदन् (ब्रह्म में जीवनवाले) ऐसा सबको समझकर शान्त होकर उपासना करे इत्यादि। "किञ्च, माया क्षेत्राणि दर्शयित्वा, जीवेशावभावसेन करोति, माया चाविद्या च स्वयमेव भवति। नृसिंहोत्तरता० खं० ९" माया-सूक्ष्म देहरूप क्षेत्रों को व्यक्त करके चिदाभास द्वारा जीव और ईश्वर को सिद्ध करती है। "जगतो यदुपादानं मायामादाय तामसीम्। निमित्तं शुद्धसत्त्वां तामुच्यते ब्रह्म-तद्गिरा ॥१॥ यदा मलिनसत्त्वां तां कामकर्मादि दूषिताम्। आदत्ते तत्परं ब्रह्म त्वं पदेन तदोच्यते ॥२॥ त्रितयीमपि तां मुक्त्वा परस्परविरोधिनीम् अखण्डं सच्चिदानन्दं परं ब्रह्मैव लक्ष्यते। पञ्चदशी १।४४+४६" तामसी=तमः प्रधाना=

---

देवादि उत्पन्न होते हैं, और देवादि की आकृति तथा अव्यक्त शब्द नित्य हैं, उनका सम्बन्ध भी नित्य है, अभिव्यक्ति अनित्य है, सो प्रत्यक्ष (श्रुति) और अनुमान स्मृति से सिद्ध होता है। "स भूरिति व्याहरत् स भूमिमसृजत्। तै० ब्रा० २।२।४।२" नाम रूपे च भूतानां कर्मणां च प्रवर्तनम्। वेद शब्देभ्य-एवादौ निर्ममे स महेश्वरः। मनु० २।१२१" अनादि वे नाम और रूप मायात्मक हैं। अतः शब्द रूप एक नारी को कहा गया है।

**बाखरी एक विधाते कीन्हा। चौदह ठहर पाठ सो लीन्हा॥**
**हरिहर ब्रह्मा महतो नाऊँ। तिन पुनि तीन बसावल गाऊँ॥**

विचाराद्यैस्तथा मातुर्ज्ञात्वा तं श्रवणाद्विधिः।
अन्येभ्य उपदेशार्थं दयया प्रेरितो मुहुः॥२६॥
वेदाँश्चकार शुद्धात्मा[1] पश्यन्त्यादिक्रमेण सः।
पराया ब्रह्मरूपाया वैखरीशब्दलक्षणान्॥२७॥
तेषामेव तु वेदानां पठनं पाठनं तथा।
भुवनेषु हि सर्वेषु प्रावर्तत पुरा सदा॥२८॥
स्वभूशंभुविधातारो महान्तस्तावदीरिताः।
तेषां वाचस्ततः सर्वैः प्रमाणत्वेन संधृताः॥२९॥
देवमानवपातालाँल्लोकाँश्च त्रींस्त एव हि।
सर्वज्ञा वासयामासुर्लोकानां वृद्धिहेतवे॥३०॥

माया के द्वारा जो जगत् का उपादान कारण होता है। शुद्धसत्त्ववाली माया द्वारा निमित्त कारण होता है। तत्त्वमसि, मे तत् पद से वह ब्रह्म कहा जाता है, काम-कर्मादि से दूषित मलिनसत्त्वा=अविद्या द्वारा त्वं पद से कहा जाता है, तीनों को त्यागने पर ब्रह्म ज्ञात होता है।

मातारूप गुरु के उपदेश से तथा विचारादि द्वारा, प्रथम श्री ब्रह्मा विष्णु और महेशजी ने सबके आदि अन्त स्वरूप सर्वात्मा ब्रह्म को समझा, फिर अन्य जिज्ञासुओं को समझाने के लिये विधाता (ब्रह्मा) जी ने एक बाखरी (बखार=धर्मज्ञान शब्द अर्थ का कोषरूप खजाना) रूप वैखरी वाणी-रूप वेदों की रचना की (वेदों को प्रकट किया)। फिर चौदह ठहर (स्थानों भुवनों) में उसी का पाठ लोगों ने लिया। (वेदों का अध्ययन किया)। क्योंकि श्रीहरि, हर, ब्रह्मा महतो ( महान् ) नामवाले अधिकारी ( नेता ) पुरुष हुए हैं। अतः उनके उपदेश व्यहारादिक को लोगों ने प्रमाणरूप माना, फिर उन ब्रह्मादिकों ने तीन लोकरूप, तीन ग्रामों को बसाया, तथा ब्रह्मलोक, वैकुण्ठ, कैलास को बसाया।

---

१ पराया ब्रह्मरूपायाः सकाशात् पश्यन्तीमध्यमा क्रमेण वैखरीशब्दलक्षणान् वेदाँश्चकार "सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत्" ज्ञप्तेर्बभूवपश्यन्ती मध्यमा वाक् ततः परम्। वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः। नन्दिकेश्वरकारिका।

**तिन पुनि रचल खण्ड ब्रह्मण्डा। छौ दर्शन छ्यानबे पाखण्डा॥**
**पेटहि काहु न वेद पढ़ाया। सुनत कराय तुरुक नहिं आया॥**

अज्ञानां भोगसिद्ध्यर्थं तज्ज्ञमोक्षार्थमेव च।
ब्रह्माण्डं सह खण्डैस्ते रचयामासुराद्दताः॥३१॥
षड्दर्शनानि पाषण्डास्तथा षण्णवतिः पुरा।
जातानि गुणभेदेन किञ्चित्तत्रोच्यते शृणु॥३२॥
केचिद्गर्भे न वै वेदान् पठित्वा लेभिरे जनिम्।
लभन्ते न तथा केऽपि छिन्नशिश्नाग्रकाः सदा॥३३॥
तथापि वेषरूपेण यत्किञ्चित् क्रियते जनैः।
तत्सर्वं विद्धि पाखण्ड धर्मसम्बन्धवर्जितम्॥३४॥

फिर तिन (उन) ब्रह्मा आदिकों ने भूमि में नव खण्ड को और ब्रह्माण्ड को भुवनादि को रचा (विविध रचना विभाग युक्त किया) और रचना में ही छः दर्शन और उनके भेदरूप छ्यानबे पाखण्ड (वेषधारी-लिङ्गी) हुए। अर्थात् १२ योगी १, १८ जङ्गम २, २४ सेवड़ा=जैन ३, १० संन्यासी ४, १४ दरवेश=शेख ५, १८ ब्राह्मण ६ हुए। तहाँ माता के पेट से ही वेद पढ़कर कोई हिन्दू नहीं आया। न पेट मे ही सुन्नत कराकर तुर्क आया। अतः जन्ममात्र से न ब्राह्मणादि हुआ न तुरुकादि हुआ। किन्तु सबके आदि अन्त स्वरूप एक ब्रह्म के ज्ञानादि के बिना छः दर्शन और छ्यानबे पाखण्ड हुए। "दर्शनं नयनस्वप्न बुद्धिधर्मोपलब्धिषु" नेत्र, स्वप्न, बुद्धि, धर्म और ज्ञान का वाचक दर्शन शब्द होता है, यहाँ धर्म का वाचक है। धर्म में भेद के बिना वेष प्रवर्तक आचार्य नामादि के भेदमात्र से भेद होना पाखण्ड है। "पाखण्डाः सर्वलिङ्गिनः" यह अमरकोश का वचन है।

**नारी मोचित गर्भ प्रसूती। स्वाँग धरे बहुते करतूती॥**

गर्भाद्मुक्ताः समे गर्भा मोचिता मायया समाः।
जायन्ते ते पुन र्वेषान् कृत्वा श्रैष्ठ्यं तु मन्वते॥३५॥
कल्पितान् कुरुते वेषान् धर्मभेदेन मानवः।
वेत्ति नैव परं तत्त्वं सर्वस्याद्यन्तलक्षणम्॥३६॥

---

१ "कुक्षिभ्रूणार्भका गर्भाः। अमरकोश" घनौती पुराने पाठ में 'मोचित' के स्थान में 'मुञ्चित' पाठ है।

वेषाद्यैः कृतकृत्यत्वं मनुते मोहतो नरः।
अज्ञानादेव संजाताः पाखण्डा नैव तत्त्वधीः ॥३७॥

माता के पेट में कोई वेषादि के नहीं होने पर भी ईश्वर की मायारूप नारी तथा माता से मोचित ( उत्पादित ) गर्भ (बच्चे) की प्रसूति (प्रजनन) होने पर वह गर्भ (बच्चा) बहुत करतूत (कल्पित) स्वाँग धरता है। अर्थात् प्रसवकाल में स्वतन्त्र नहीं जन्म पाता है। किन्तु ईश्वर की माया और मातारूप नारी से मोचित (गर्भ से मुक्त) गर्भ किया जाता है, फिर न ईश्वर के ध्यान विचारादि करता है कि सबका आदि अन्त स्वरूप वह ईश्वर कौन है की जो निज माया द्वारा मेरा जन्म दिया है। "मातृदेवोभव, पितृदेवोभव, आचर्यदेवोभव। तैत्तिरीय० १।११।२" इत्यादि शिक्षाओं को भी नहीं प्राप्त करता है। किन्तु अपने मन के अनुसार स्वाँग धरता है, वही पाखण्ड कहा जाता है। एकावन रमैनी में कहा गया है कि "रहै वदन नहिं स्वाँग स्वभाऊ" धारणा भक्ति वाला मनुष्य वदन (देह) में स्वाँग (वेष) बनाने के स्वभाववाला नहीं होता है। "देह हलाये भक्ति न होई। स्वाँग धरे नर बहुविधि जोई॥ रमैनी ६७" देह के हलाने ( कृश करने ) से भक्ति नहीं होती है। यदि कोई बहुत प्रकार के वेष धरे तो उससे भक्ति नहीं होती है। क्योंकि "देह हलाय पिञ्जर करै, धरै रैन दिन ध्यान। तदपि मिटै नहिं वासना, विना विचारे ज्ञान ॥१॥" अतः विचारादि से सर्वाद्यन्त स्वरूप ज्ञातव्य है। "आपुहि कर्ता भया कुलाला। रमैनी २६" इसमें ईश्वराधीन गर्भवास और गर्भ से प्रमोचनादि का विस्तार से वर्णन है तथा "संसारमोक्षस्थितिबन्धहेतुः। श्वेता० ६।१६" इस श्रुति में संसार से मोक्ष का और संसार में स्थिति तथा बन्धन का हेतु ईश्वर को कहा गया है। अतः उसके ज्ञानभक्ति आदि के बिना वेष धारणमात्र निरर्थक होता है।

**तहिया हम तुम एके लोहू। एके प्राण वियापै मोहू॥**
**एके जनी जना संसारा। कौन ज्ञान से भयऊ न्यारा॥**

जन्म काले वयं यूयं ह्यसृङ्मासादि संहतौ।
शरीरे प्राणसङ्गे च कृत्वात्मधिषणाः खलु ॥३८॥
आस्म भेदस्तु[१] बोधेन मनुष्ये नान्यथा क्वचित।
ततो बोधं विना सर्वे स्त्रियोऽपि पुरुषाश्च वा ॥३९॥

---

१ श्रेष्ठतादिप्रयुक्तो विभाग इत्यर्थः। "आहारनिद्राभयमैथुनानि सामान्य-

तुल्या नास्त्यत्र सन्देहो मोहाद्यैरावृतत्वतः।
केन ज्ञानेन चात्रैते जन्मना भिन्नतां गताः ॥४०॥

मायैका जननी याऽमून् जनयामास देहिनः।
स्वात्मबोधं[1] विना केन बोधेन भिन्नता भवेत् ॥४१॥

तहिया (उस जन्मकाल में) हम तुम सब मनुष्य एके (एक से=तुल्य) लोहू (रुधिर) वाले और एक से प्राणादिवाले रहते हैं। अर्थात् रुधिरादियुक्त शरीर के तुल्य अभिमानी रहते हैं और एक-सा मोहू (मोह) सबको व्यापता है, मोह सबको घेरे रहता है। संसार में सब जनी (स्त्री) और जना (पुरुष) जन्मकाल में एक से रहते हैं अथवा एक मायारूप जनी (स्त्री) ने सब संसारी को जना (जन्माया) है तो जन्मकाल में ही या वेषमात्र के धारणादि से सब कौन (किस) ज्ञान से न्यारा (भिन्न-भिन्न) हो गया। अर्थात् जन्म अज्ञान मोहादिकाल में किसी ज्ञान से न्यारा नहीं हुआ। किन्तु अज्ञानमूलक पाखण्ड से न्यारा-न्यारा हो गया (भेदभाव बढ़ गया)। आत्मज्ञान से देहादि से भिन्न नहीं हुआ।

**भौ बालक भग द्वारे आया। भग भोगी के पुरुष कहाया॥**
**अविगति की गति काहु न जानी। एक जीभ कित कहौं बखानी॥**

सुबोधेन हि ये पूर्णाः पुरुषास्त उदाहृताः।
सर्वश्रेष्ठाश्च मान्यास्ते तथा वेदा वदन्ति वै ॥४२॥

अहो तथापि मोहेन जनित्वैव भगान्नरः।
बालो भूत्वा पुनस्तस्य भोगात् पुंस्त्वं प्रमन्यते ॥४३॥

इत्थं भूता नराः केऽपि नादृश्यं सर्वसाक्षिणम्।
आत्मानं क्वापि विन्दन्ति कर्हि वर्षशतैरपि ॥४४॥

---

मेतत् पशुभिर्नराणाम्। ज्ञानं नराणामधिको हि लोके ज्ञानेन हीनाः पशुभिः समानाः॥ नरसिंहपु० अ० १६।१३"

१ यच्चाप्नोति यदादत्ते यच्चात्तिविषयानिह। यच्चास्य सन्ततो भावस्तस्मादात्मेति कथ्यते॥" इस लिङ्ग पुराण के अनुसार आप्नोति, आदत्ते, अत्ति, अतति इति आत्मा व्यावहारिक पारमार्थिक स्वरूप ज्ञातव्य है। महावाक्यों से अखण्ड एक सच्चिदानन्दस्वरूप ज्ञातव्य है।

जिह्वया चैकया वक्तुं कथं कोपि भवेज्जनः ।
समर्थस्तान् जनान् सर्वान् महिम्नो वा महेशितुः ॥४५॥

यह जीवात्मा देहीरूप से भग द्वारा संसार में आकर प्रथम निपट अज्ञ बालक हुआ। फिर ज्ञानध्यानादि के योग्य अवस्था को पाकर भी विवेकादि के बिना भग भोग कर (भग भोग में आसक्त होकर) ही अपनी स्त्री का पुरुष (स्वामी पति) कहलाने लगा। अतः योग्य ब्रह्मचर्यादि से रहित होने के कारण, भोगासक्त काहु (किसी) ने अविगति (अग्राह्य अदृश्य) उक्त ज्योतिःस्वरूप आत्मा की गति (मर्म महिमा) नहीं जानी। अर्थात् ऐसे मनुष्य आत्मा का अनुभव नहीं कर सके, उस आत्मा की महिमा अनन्त है तथा अज्ञ जीव भी अनन्त है। अतः एक जीभ से कहाँ तक व्याख्यान करके कहे जायँ। ये अनन्तरूप से ही ज्ञातव्य हैं। ज्ञान के लिये सत्य, तप, विवेक, ब्रह्मचर्यादि श्रुति में वर्णित साधन सम्पादनीय हैं। फिर ज्ञान होने पर जितेन्द्रिय पुरुष होना उचित है। क्योंकि "आत्मज्ञानेन ये पूर्णाः पुरुषास्त उदाहृताः। यादृशास्तादृशाः सन्तु शरीरेण द्विजोत्तमाः॥ आत्मपु० अ० ५. ३४२" गार्गी श्रीयाज्ञवल्क्यजी से कही है कि हे द्विजोत्तम! जो आत्मज्ञान से पूर्ण हैं, वे ही पुरुष कहे गये हैं, शरीर से जैसा हों तैसा रहे।

**जो मुख होय जीभ दश लाखा। तो कोइ आय महन्तो भाखा॥**

अनन्तो महिमा तस्याग्रृह्यस्य वै निजात्मनः।
एकया जिह्वया तावत् कथंकारेण कथ्यते ॥४६॥
जिह्वावक्त्राणि चेत् कस्य नियुतानि दशाऽत्र वै।
तत्राप्यस्याल्प एवासौ महिमा[1] कथ्यते हि तैः ॥४७॥

यदि किसी के मुख और जीभ दश लाख हों तो कोई (कुछ) ही महन्त (महिमा) उस महापुरुष की भाखा (भाषण) में आ सकती है, सम्पूर्ण नहीं, इसीसे आगे ७८ शब्द में कहा गया है कि "जाकी गति ब्रह्मा नहिं जानी, शिव सनकादिक हारे। ताकी गति नल कैसे पैहैं, कहहिं कबीर पुकारे॥"

---

१ "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति। शुक्लयजुर्वेद० अ० ३१। २" अमृतत्वस्य = मोक्षस्य ईशानः स्वामी = दाता। स अन्नेन = अमृतेन, अतिरोहति = अतिरोधम् करोति। "न तं विदाथ यत इमा जजानान्यद् युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासँश्चरन्ति। ऋग्वेद, मण्डल १०।८।८२।७" इमा =

साखी—कहहिं कबीर पुकारिके, ई बैली व्यवहार।
राम नाम जाने विना, बूड़ मुआ संसार ॥२॥

इत्थं भूतात्मतत्त्वं हि न लभ्यं पशुधर्मिभिः।
अहो तथापि लोकोऽयं पशुधर्मे प्रवर्तते ॥४८॥
भगासक्त्यभिमानादिः पशुधर्मो निगद्यते।
तेन रामं नरोऽज्ञात्वा संसारेऽत्र निमज्जति ॥४९॥
रामं ज्ञात्वा महाप्राज्ञा ह्युत्तरन्ति भवार्णवम्।
रामनाम विना मूढो मुहुर्भ्रान्त्वा निमज्जति ॥५०॥
सकृदेव प्रपन्नस्य सर्वभूताभयं यतः।
स रामः सर्वभृत् साक्षी ज्ञानमात्रेण रक्षति ॥५१॥
यस्याज्ञाने च केऽप्यत्र न तरन्ति भवार्णवम्।
तं सर्वसुहृदं रामं वन्दे सच्चित्सुखात्मकम् ॥५२॥

यन्नामवित्त्या[1] सततं च भक्त्या स्मृत्या च यस्यात्र निजात्मतत्त्वम्।
सदाऽप्रबुद्धं त्वधुनाऽनुबुद्धं स्यात्तं भजे राममजं हरिञ्च ॥५३॥२॥

सद्गुरु कबीर साहब पुकार के कहते हैं कि (ई) यह भग भोगादि में आसक्ति, मिथ्या पुरुषसत्वादि के अभिमानादि, बैल तुल्य जड़ मनुष्यों के व्यवहार होते हैं कि जिससे सर्वात्मा रामनामवाले परम पुरुष को जाने बिना ये संसारी जीव संसार सागर जन्मादि प्रवाह में बूड़ (डूब) कर मुये और मरते हैं। इस जीव का व्यावहारिक स्वरूप कहा गया है कि "चैतन्यं यदधिष्ठानं लिङ्गदेहश्च यः पुनः चिच्छाया लिङ्गदेहस्था तत्सङ्घो जीवउच्यते॥ पञ्चदशी प्रकरण ४।११" में कूटस्थ निर्विकार अधिष्ठानस्वरूप चेतन और लिङ्ग (सूक्ष्म) देह लिङ्ग देह में चिदाभास इन तीनों का समूह जीव कहा जाता है ॥२॥

---

इमानि भूतानि यतस्तं न विदाथ। युष्माकमहं प्रत्यग्गम्यानामन्यत् तत् नीहारेण-अज्ञानेन यूयमावृताः, जल्प्याः-मिथ्याज्ञानेनावृताः, अतः प्राणान्-इन्द्रियाणि तृप्यन्तः, उक्थं शंसन्तश्चरन्ति न परमात्मान्वेषणपरा भवन्तीत्यर्थः। भूतभावी वर्तमान जो यह सब वस्तु हैं सो पुरुष स्वरूप (आत्मा ही) हैं। वही अमृतत्व (मोक्ष) का स्वामी (दाता) है। अतः वही अन्न (अमृत) से वृद्धि करता है। जिससे ये प्रजा हुई उसको नहीं जानते हो, तेरा वह अन्य स्वरूप सत्य अन्तर्गत है। तुम अज्ञान से आवृत्त हो। अतः मिथ्या ज्ञान से आवृत्त, इन्द्रिय तर्पक, उक्थगायक होते हो, परमात्मा का अन्वेषण नहीं करते हो।

१ इन्द्रवज्रा-उपेन्द्रवज्रा का मिश्रणरूप (उपजाति) वृत्त=छन्द है।

सम्बन्ध–उक्त मृत्यु से बचने के लिये आगे उपदेश है और विशेष सृष्टि तदाधार का वर्णन है कि—

## रमैनी ३

**प्रथम अरम्भ कौन के भाऊ। दूसर प्रगट कीन्ह सो ठाऊँ॥**
**प्रगटे ब्रह्म विष्णु शिव शक्ती। प्रथमहि भक्ति कीन जिव उक्ती॥**
**प्रगटे पौन पानि औ छाया। बहु विस्तार के प्रगटी माया॥**

आरम्भोह्यभवत्[1] केषां तावदेतद्विचार्यताम्।
प्रभवन्ति यतश्चैते द्वितीयो विद्यते स कः॥५४॥
अभिव्यक्तविचारो हि प्रथमः क्रियतां त्वया।
अभिव्यक्ताश्रयस्याथ द्वितीयः स विधीयताम्॥५५॥
वेधोविष्णुहराः शक्ति र्ब्रह्मणोऽपरिणामिनः।
माययापरिणामिन्या ह्याविरासन् युगादिषु॥५६॥
जीवत्वं स्वेषु संकल्प्य भक्तिं चक्रुश्च ते पुनः।
मतारिश्वा पयश्चैव तेजोऽपि व्यनगात्मनः॥५७॥
महाकाशस्वरूपेण स्वयं मायाऽभवत् किल।
आत्मसत्ताप्रकाशाभ्यां जानीहि मतमुत्तमम्॥५८॥

उक्त ज्योतिःस्वरूप सत्यात्मा के ज्ञान के लिये प्रथम यह विचार करना चाहिये कि सृष्टि के प्रथम (आदि) काल में किसका आरम्भ (असत का जन्म) हुआ, दूसरा विचार करना चाहिये कि इन कार्यों से भिन्न इन्हें जन्म देनेवाला कारणरूप दूसरा आधाररूप ठाम (ठिकाना) कौन है? उक्त विचारों से समझना चाहिये कि ब्रह्मा, विष्णु, शिव ये सब देव और शक्ति (देवी) ये सब प्रकट (उत्पन्न) हुए हैं। अतः ये अभिव्यक्ति जन्मवाले हैं, ये ही जगत् का अधिष्ठान आधार या कर्ता नहीं है। अतएव ये सब अपने में जीवभाव की उक्ति (कथन कल्पना) करके प्रथम ही भक्ति किये हैं। अर्थात् अपने में जीवता की उक्तिपूर्वक तप आदि किये हैं। इनसे भी प्रथम पौन (पवन) वायु, तत्त्व और उसके अभिमानी देव प्रगट हुए तथा अभिमानी देव सहित पानी (जल) और छाया (कान्ति-तेज) प्रगट हुए और बहुत विस्तार-स्वरूप आकाशरूप के (से) माया स्वयं प्रगट हुई।

---

१ पूर्वमसतः पश्चात्कारणव्यापारात्कारणाद् भिन्नत्वेनात्मलाभ आरम्भ इति

**प्रगटे अण्ड पिण्ड ब्रह्मण्डा। पृथिवी प्रगट कीन्ह नव खण्डा ॥**
**प्रगटे सिद्ध साधक संन्यासी। ये सब लागि रहे अविनाशी ॥**
**प्रगटे सुर नर मुनि सब झारी। ताही खोज परे सब हारी ॥**

जरायुजाण्डजातानि ब्रह्माण्डानि सहस्रशः।
पृथिवी तत्र खण्डानि प्रादुरासन् पुरा ततः ॥५९॥
सिद्धाश्चसाधकाः सर्वे जनाः संन्यासिनस्तथा।
प्रादुर्भूयाऽऽलगन् सर्वे देवे नाशविवर्जिते ॥६०॥
देवा नरा मुनीनां च सङ्घा वै भूतजातयः।
पादुर्भूय तमन्विष्य परां ग्लानिमुपागताः ॥६१॥
अनात्मानं हि यं मत्वा लेभिरे नैव केचन।
तमात्मत्वेन मत्वा तु लभन्तेऽत्र विवेकिनः ॥६२॥

ब्रह्माण्ड प्रगट हुआ, उसमें अण्डपिण्ड ( अण्डज पिण्डज ) प्राणी प्रगट हुए। पृथिवी प्रगट हुई, उसमें नौ (नव) खण्ड ( विभाग ) किये गये। भारतादि नवखण्ड हुए। सिद्ध (अणिमादियुक्त) साधक ( साधनाभ्यासी ) संन्यासी ( ज्ञानीविरक्त ) प्रगट हुए। ये सब अविनाशी सर्वात्मदेव में लग कर स्थिति काल में स्थिर रहे ( स्थिर हुए )। अर्थात् अविनाशी अधिष्ठान, ईश्वर सर्वात्मा के आश्रित सब स्थिति पाये। सुर, नर, मुनि सब झारी ( अशेष ) प्रगट हुए। प्रगट होकर जिसके आश्रित रहे, उसको दूर तटस्थादिमान कर, और कर्म उपासना तप आदि के द्वारा खोज कर हार परे ( हैरान हुए ) कोई आत्मज्ञानी ही ज्ञान से पाये।

जिस अविनाशी को यहाँ सर्वाधार कहा गया है। उसीको "घट घट अविनाशी बसै" इस प्रकार से ( रमैनी साखी ६३ ) में कहा गया है। रमैनी ७४, में "निराधार आधार ले जानी। राम नाम ले उचरी वानी" निराधार सर्वाधार राम उसीको कहा गया है। "कहहिं कबीर मुवा नहिं सोई, जाके आवागमन न होई। शब्द ४९" इससे अविनाशी सर्वात्मा को

---

न्यायवैशेषिकमतम्। सतत्त्वतोऽन्यथाभावः कारणसमसत्ताकः परिणाम इति सांख्ययोगमतम् ॥ अतत्वतोऽन्यथाभावो विवर्त इति वेदान्तमतम्। अनयोर्मतयोः सत्कार्यवादस्वीकारादभिव्यक्तिरेव कार्यस्यभवति, तत्र सांख्यादौ स्वरूपसत्वम्, वेदान्ते तु कारणात्मना कार्यसत्त्वमित्यन्यदेतत् ॥

साखी—जीव शीव सब प्रगटे, वह ठाकुर सब दास ।
कबिर और जानै नहीं, राम नाम की आश ॥३॥

तटस्थेशाश्च जीवाश्च सर्वेऽमीमायिनोनिजात् ।
प्रादुरासन्नजाद्देवादतः सर्वेश्वरो हि सः ॥६३॥
ज्ञानिनो न तमन्यं तु पश्यन्ति वै निजात्मनः ।
विविक्तं तं परिज्ञाय वर्तन्ते निश्चिताः स्वयम् ॥६४॥
अविनाशिनमात्मानं ज्ञात्वेन्द्रियविवर्जितम् ।
श्रेयः प्रेयस्ततश्चैव पश्यन्ति ज्ञानिनः खलु ॥६५॥
सर्वस्य प्रभुमीशानं सर्वस्य शरणं च तम् ।
विज्ञायतन्मयाभूत्वा जायन्ते नैव ते पुनः ॥६६॥
सर्वमुपद्यते यस्माद् यस्मिँस्तिष्ठति लीयते ।
तस्याशां कुर्वते तेऽत्र त्वाशामुक्ताभवन्ति च ॥६७॥
रामं ज्ञात्वा मरुन्नाथं मायानाथं जगत्पतिम् ।
अनाथं सर्वनाथं च जीवन्मुक्ता भवन्ति ते ॥६८॥
श्रुतं श्रुतौ स्मृतं सर्वं स्मृतिसंघे परं महः ।
यत्तं राममहं वन्दे त्वनुभूतं महात्मभिः ॥६९॥३॥

इति हनुमदीये रमैनीरसोद्रेके सृष्टिनिरूपणं नाम प्रथमः प्रवाहः ॥१॥

विभुदर्शाया गया है । तथा "कहहिं कबिर सारि दुनिया विनशल, रहल राम अविनाशी हो । कहरा ११" इससे अविनाशी में श्रुतिसिद्ध अद्वैत सद्रूपता दर्शाई गई है ।

अण्डजादि जीव और ब्रह्माआदि तटस्थशिव (स्वामी ईश्वर ) सब प्रगट हुए । परन्तु वह एक अविनाशी राम सच्चा ठाकुर ( स्वामी ) है, अन्य सब उसी सर्वाधार के दास हैं, इसीसे ( कबीर कामविजेता=ज्ञानी गुरु ) और (अन्य) को जगदीश सेव्यादि नहीं जानते हैं, किन्तु एक सर्वात्मा राम निज परमार्थ स्वरूप की ही आश ( अवलम्ब = ध्यान ) रखते हैं । इसी स्वरूप का "निराधार आधार ले जानी । रामनाम ले उचरी वानी । रमैनी. ७४" इत्यादि वचनों से वर्णन किया गया है ॥३॥

---

## अथ रमणादि प्रकरण २, रमैनी ४

**प्रथम चरण गुरु कीन्ह विचारा। कर्ता गावै सिरजनहारा ॥**
**कर्महि कै कै जग बौराया। शक्ति भक्ति लै बाँधिन माया ॥**

विश्वस्य प्रथमे भागे काले कृतयुगात्मके।
येऽभूवन् गुरवस्ते वै विचारं व्यदधुर्मिथः ॥ १ ॥
विचारेण परिज्ञाय साश्चर्यं ते त्विदं विदुः।
अहो स्वयमयं कर्ता स्रष्टारं मन्यते अन्यकम् ॥ २ ॥
संगायन् भजते तं च तस्यैव प्राप्तये मुहुः।
वित्ताद्यर्थं च कर्माणि कुरुतेनात्मचिन्तनम् ॥ ३ ॥
कर्माण्येव[1] तु कुर्वाणो लोकः कामादिनाऽमुहत्।
शक्तिभक्त्या ततो मायाऽबध्नादेनं गुणात्मिका ॥ ४ ॥

संसार के प्रथम चरण (पहला भाग=पाद ) रूप सतयुग के गुरु (सर्वाधार ठाकुर के ज्ञानी ) ब्रह्मा आदिकों ने अन्यप्राणियों के हित के लिये, संसार के कर्ता आदि का विचार किया कि—"किं स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित् कथासीत्। यतो भूमिं जनयन् विश्वकर्मा वि्यामौर्णोन्महिना विचक्षा। ऋग्म० १।६।८१। यजुः अ.१७।१८" जिससे आरम्भ किया जाय, सो उपादान कारण क्या था, किसका किस प्रकार से आरम्भ हुआ। यह कुछ सत्य नहीं था कि जिससे विश्वद्रष्टा विश्वकर्मा भूमिको रचता हुआ, द्यौः (स्वर्ग) को विऔर्णोत्= बनाया। सो सत्य अधिष्ठान अपनी महिमा से युक्त क्या था, इत्यादि।

फिर इस विचार से समझा कि स्वयं कर्तास्वरूप जीव किसी अन्य तटस्थ-सिरजनिहार ( कर्ता ) को गाता है। अर्थात् "विश्वतश्चक्षुरुत विश्वत्तो मुखः। श्वेता० अ० ३।३। स इह प्रविष्ट आ नखाग्रेभ्यः। बृ०१।४।७।" वह कर्ता ही सब तरफ नेत्रादि वाला बना हुआ है और इस शरीर में आभासादिरूपसे नखाग्रपर्यन्त प्रविष्ट है। अतः सर्वात्मा है, सोई माया शक्ति द्वारा सब का कर्ता है, अज्ञ जीव अन्य को गाता है। वह कर्ता भक्ति ज्ञान से प्राप्तव्य है, ज्ञान के विवेकादि साधन हैं, विवेकादि के सत्कर्म उपासना

---

१ "कर्मणा मृत्युमृषयोनिषेदुः प्रजावन्तो द्रविणमीहमानाः। अथापरे ऋषयो ये मनीषिणः परं कर्मभ्योऽमृत्तत्वमानशुः॥१॥ नैकान्ततः प्रतिकारः कर्मणां कर्म केवलम्। भा. स्क. ७।२६।३४"

